धम्मो द्रव्यधर्म्मः-धर्म्मास्तिकायः 'तित्ताइसहावो वा' इति तिक्तादिर्वा द्रव्यस्य स्वभावो द्रव्यधर्म्मः 'गम्माइत्थी कुलिंगो व'त्ति गम्यादिर्धर्म्मः स्त्रीविषयो द्रव्यधर्म्मः, तत्र केषाञ्चित् मातुलदुहिता गम्या केषांचिदगम्येत्यादिः तथा कुलिङ्गो वा-कुतीर्थिकधर्म्मो द्रव्यधर्म्मः, पाठान्तरं 'दुविहो य होइ धम्मो दव्वधम्मो य भावधम्मो य । धम्मत्थिकाउ दव्वे दव्वस्स व जो भवे भावो ॥ १ ॥' सुगमं । भावधर्म्मप्रतिपादनार्थमाह—

दुह होइ भावधम्मो सुअ चरणे वा सुअम्मि सज्झाओ । चरणम्मि समणधम्मो खंतीमाई भवे दसहा १०७६

द्विविधो भवति भावधर्म्मः, तद्यथा-श्रुते चरणे च, श्रुतधर्मश्चरणधर्म्मश्चेत्यर्थः, तत्र श्रुते श्रुतविषयो धर्म्मः स्वाध्यायो-वाचनादिः, चरणे चरणविषयो धर्म्मः श्रमणधर्म्मो, दशधा दशप्रकारः क्षान्त्यादिः, पाठान्तरं वा 'भावंमि होइ दुविहो सुयधम्मो खलु चरित्तधम्मो य । सुयधम्मो सज्झातो चरित्तधम्मो समणधम्मो ॥ १ ॥' सुगमं । संप्रति तीर्थनिरूपणायाह—

नामं ठवणातित्थं दव्वतित्थं च भावतित्थं च । इक्किक्कंपि अ इत्तो णेगविहं होइ नायव्वं ॥ १०७७ ॥

'नामं'ति नामतीर्थं स्थापनातीर्थं द्रव्यतीर्थं भावतीर्थं च, 'एत्तो'त्ति नामादिनिक्षेपमात्रकरणादनन्तरमेकैकं नामतीर्थादि अनेकविधं भवति ज्ञातव्यं ॥ तत्र नामतीर्थमनेकविधं जीवाजीवविषयादिभेदात्, स्थापनातीर्थं साकारानाकारभेदात्, द्रव्यतीर्थं आगमनोआगमादिभेदात्, तत्र ज्ञशरीरभव्यशरीरद्रव्यतीर्थप्रतिपादनार्थमाह—

दाहोवसमं तण्हाइ छेअणं मलपवाहणं चेव । तीहिं अत्थेहिं निउत्तं तम्हा तं दव्वओ तित्थं ॥ १०७८ ॥

इह शशरीरभव्यशरीरव्यतिरिक्तं नोआगमतो द्रव्यतीर्थं मागधवरदामादि परिगृह्यते, बाह्यदाहादेरेव तत उपशमसद्भावात्, तथा चाह–दाहोपशममिति, दाहो–बाह्यः सन्तापः तस्योपशमो यस्मिन् तद्दाहोपशमं 'तण्हावुच्छे(इछे)यणं'ति तृषः–पिपासायाः छेदनं जलसङ्घातेन तदपनयनात्, तथा मलो बाह्यः अङ्गसमुत्थस्तस्य प्रवाहणं, प्रवाह्यतेऽनेनेति प्रवाहणं, जलेन तस्य प्रक्षालनात्, एवं त्रिभिरर्थैः कारणगतैर्नियुक्तं निश्चयेन युक्तं निर्युक्तं–प्ररूपितं, यदिवा प्राकृतत्वात् सप्तम्यर्थे तृतीया, त्रिषु अर्थेषु नियोजितं, यस्मादेवं बाह्यदाहादिविषयमेव तस्मात् मागधादि द्रव्यतीर्थं, मोक्षसाधकत्वाभावात् ॥

सम्प्रति भावतीर्थमधिकृत्याह—

कोहम्मि उ निग्गहिए दाहस्सोवसमणं हवइ तत्थं । लोहम्मि उ निग्गहिए तण्हावुच्छेअणं होइ ॥ १०७९ ॥
अट्ठविहं कम्मरयं बहुएहिं भवेहिं संचिअं जम्हा । तव–संजमेण धोवइ तम्हा तं भावओ तित्थं ॥ १०८० ॥

इह भावतीर्थमपि आगमनोआगमभेदतोऽनेकप्रकारं, तत्र नोआगमतो भावतीर्थं क्रोधादिनिग्रहसमर्थं प्रवचनमेव गृह्यते, तथा चाह–क्रोधे एव निगृहीते दाहस्य द्वेषानलजातस्यान्तः प्रशमनं भवति तथ्यं–निरुपचरितं, नान्यथा, तथा लोभ एव निगृहीते 'तण्हावुच्छेयणं होति'त्ति तृषः–अभिष्वंगलक्षणायाः छेदनं–व्यपगमो भवति, तथा अष्टविधं अष्टप्रकारं कर्मैव जीवानुरंजनात् कर्म्मरजः बहुभिर्भवैः सञ्चितं तपःसंयमेन धाव्यते–शोध्यते यस्मात् तस्मात् प्रवचनं भावतीर्थम् ॥

दंसणनाणचरित्तेसु निउत्तं जिणवरेहिं सव्वेहिं । एएण होइ तित्थं एसो अन्नोऽवि पज्जाओ ॥ १०८१ ॥

दर्शनज्ञानचारित्रेषु नियुक्तं–नियोजितं सर्वैः ऋषभादिभिर्जिनवरैः–तीर्थकृद्भिः, यस्मादित्थंभूतेषु नियुक्तं तस्मात्

प्रवचनं भावतीर्थं, अथवा येन कारणेनेत्थंभूतेषु त्रिष्वर्थेषु नियुक्तमेतेन कारणेन प्रवचनं भावतस्त्रिस्थं, एष त्रिस्थलक्षणः तीर्थशब्दापेक्षया अन्यः पर्यायः ॥ उक्तं तीर्थं, अधुना कर उच्यते—

नामकरो ठवणकरो दव्वकरो खित्त-काल-भावकरो । एसो खलु करगस्स उ निक्खेवो छव्विहो होइ ॥१०८२॥

नामकरः स्थापनाकरः द्रव्यकरः 'क्षेत्रकालभावकरो' इति करशब्दः प्रत्येकमभिसम्बध्यते क्षेत्रकरः कालकरो भावकरश्च, एष खलु कर एव करकस्तस्य निक्षेपः षड्विधो भवति॥ तत्र नामस्थापने क्षुण्णत्वादनादृत्य द्रव्यकरमभिधित्सुराह—

गो-महिसु-ट्टि-पसूणं छगलीणंपि अ करा मुणेअव्वा । तत्तो अ तणपलाले भुसकट्ठंगारकरमेव ॥१०८३॥

सीउंपरजंघाए बलिवद्दकरे घडे अ चम्मे य । चुल्लगकरे अ भणिए अट्ठारसमा करुप्पत्ती ॥ १०८४ ॥

गोमहिषोष्ट्रपशूनां छगलीनामपि च करा ज्ञातव्याः, तत्र गोकरो गोयाचनं, यथा एतावतीषु विक्रीतास्वेका गौर्दातव्येति, यदिवा गोविक्रयस्य रूपकयाचनं गोकरः १ एवं महिषकर, २ उष्ट्रकरः ३ पशुकरः ४ छगली-उरभ्रा तत्करः छगलीकरः ५ ततस्तृणविषयः करः तृणकरः ६ पलालकरः ७ तथा बुसकरः ८ काष्ठकरः ९ अङ्गारकरः १० शीता-लाङ्गलपद्धतिस्तामाश्रित्य करो-भागो धान्ययाचनं शीताकरः ११ उम्बरो-देहली तद्विषयः करो रूपकयाचनं उम्बरकरः १२, एवं जङ्घाकरः १३ बलीवर्दकरः १४ घटकरः १५ चर्मकरः १६ चुल्लगो-भोजनं तदेव करः चुल्लगकरः, स चायं ग्रामेषु पवकुलादीनधिकृत्य प्रसिद्ध एव १७ अष्टादशा करस्योत्पत्तिः स्वकल्पनाशिल्पिनिर्म्मिता, पूर्वोक्तसप्तदशकरव्यतिरिक्तः स्वेच्छया कल्पितोऽष्टादशः करः, स त्वौत्पत्तिक इति प्रसिद्धः ॥ उक्तो द्रव्यकरः, सम्प्रति क्षेत्रकरादीनभिधित्सुराह—

खित्तम्मि जंमि खित्ते काले जो जम्मि होइ कालम्मि। दुविहो उ होइ भावे अपसत्थो तह पसत्थो अ ॥१०८५॥

यो यस्मिन् क्षेत्रे शुल्कादिरूपो विचित्रः करः स क्षेत्रे-क्षेत्रविषयः करः, तथा यो यस्मिन् काले भवति कुटिकादानादिरूपः करः स काले कालकरः, द्विविधश्च भवति भावे भावकरः, द्वैविध्यमेव दर्शयति-प्रशस्तः तथा अप्रशस्तश्च, तत्राप्रशस्तपरित्यागात् (प्रशस्तो भद्रतीति) प्रशस्तमेवाभिधित्सुराह—

कलहकरो डमरकरो असमाहिकरो अनिव्वुइकरो अ। एसो अ अप्पसत्थो एवमाई मुणेअव्वो ॥ १०८६॥

आह-उक्तप्रयोजनसद्भावात् तदुद्देशेऽप्ययमेवादावप्रशस्तः कस्मान्नोपन्यस्तः?, उच्यते, इह मुमुक्षुणा प्रशस्त एव भाव आसेवनीयो, नेतर इति ख्यापनार्थमादौ प्रशस्त उक्त इत्यदोषः, तत्र कलहो-वाचिकं भण्डनं तत्करणशीलोऽप्रशस्तक्रोधाद्यौदयिकभाववशतः कलहकरः, कायवाङ्मनोभिर्विचित्रं ताडनं डमरं तत्करणशीलो डमरकरः, तथा समाधानं समाधिः-स्वास्थ्यं न समाधिरसमाधिः-अस्वास्थ्यनिबन्धना सा सा कायादिचेष्टा तत्करणशीलोऽसमाधिकरः, निर्वृत्तिः-सुखं अनिर्वृत्तिः-पीडा तत्करणशीलोऽनिर्वृत्तिकरः, एष तुशब्दस्यावधारणार्थत्वादेष एव जात्यपेक्षया, न व्यक्त्यपेक्षया, एवमादिर्व्यक्त्यपेक्षया, अप्रशस्तो भावकरो ज्ञातव्यः ॥ सम्प्रति प्रशस्तं भावकरमभिधित्सुराह—

अत्थकरो हिअकरो कित्तिकरो गुणकरो जसकरो अ। अभयंकर निव्वुइकरो कुलगर तित्थंकरंतकरो ॥१०८७॥

इह अर्थो नाम विद्याऽपूर्वं धनार्जनं शुभमर्थ इति ततः प्रशस्तविचित्रकर्म्मक्षयोपशमादिभावतस्तत्करणशीलोऽर्थकरः, एवं हितादिष्वपि भावनीयं, नवरं हितं-परिणामपथ्यं यत्किञ्चित्कुशलानुबन्धि, कीर्त्तिः-दानपुण्यफला गुणा-ज्ञानादयः

यशः-पराक्रमकृतं, पराक्रमसमुत्थः साधुवाद इति भावः, अभयादयः प्रकटार्थाः, नवरमन्तकर इत्यत्रान्तः कर्म्मणां तत्फलभूतस्य वा संसारस्य परिगृह्यते ॥ उक्तो भावकरः, अधुना जिनादिप्रतिपादनार्थमाह—

जिअकोह-माण-माया जिअलोभा तेण ते जिणा हुंति। अरिणो हन्ता रयं हंता अरिहंता तेण वुचंति ॥१०८८॥

जितक्रोधमानमाया जितलोभा येन कारणेन भगवन्तस्तेन कारणेन जिना भवन्ति, 'अरिणो हंता' इत्यादि गाथा-दलं यथा नमस्कारनिर्युक्तौ व्याख्यातं तथैव द्रष्टव्यं ॥ साम्प्रतं 'कीर्त्तयिष्यामि' इत्यादि व्याचिख्यासुरिदमाह—

कित्तेमि कित्तणिज्जे सदेवमणुआसुरस्स लोगस्स । दंसणनाणचरित्ते तवविणयो दंसिओ जेहिं ॥ १०८९ ॥

'कित्तेमि'त्ति प्राकृतत्वात् कीर्त्तयिष्यामि, नामभिर्गुणैश्च, किंभूतान् ?–कीर्त्तनीयान्, स्तवार्हानित्यर्थः, कस्येत्यत्राह–'सदेवमनुजासुरस्य लोकस्य त्रैलोक्यस्येति भावः, गुणानुपदर्शयति–दर्शनज्ञानचारित्राणि मोक्षकारणानि, सूत्रे चैकवचनं समाहारत्वात्, तथा तपोविनयोऽत्र दर्शितः यैः, तत्र तप एव कर्मविनयात् तपोविनयः ॥

चउवीसंति अ संखा उसभाईआ उ भण्णमाणा उ । अविसद्दग्गहणा पुण एरवयमहाविदेहेसु ॥ १०९० ॥

चतुर्विंशतिरिति संख्या, ते तु ऋषभादिका भण्यमाना एव, तुशब्द एवकारार्थः, अपिशब्दग्रहणात् पुनः ऐरवत-महाविदेहेषु ये भगवन्तस्तद्ग्रहोऽपि वेदितव्यः, इह सूत्रे 'तात्स्थ्यात्तद्व्यपदेश' इति न्यायादैरावतमहाविदेहाश्चेत्युक्तम् ॥

कसिणं केवलकप्पं लोगं जाणंति तह य पासंति । केवलचरित्तनाणी तम्हा ते केवली हुंति ॥ १०९१ ॥

'कृत्स्नं' सम्पूर्णं 'केवलकल्पं' केवलोपमं, इह कल्पशब्द औपम्ये गृह्यते, उक्तं च–"सामर्थ्ये वर्णनायां च, छेदने

करणे तथा । औपम्ये चाधिवासे च, कल्पशब्दं विदुर्बुधाः ॥ १ ॥" लोकं पञ्चास्तिकायात्मकं जानन्ति विशेषरूपतया, तथैव सम्पूर्णमेव, चशब्दस्यावधारणार्थत्वात्, पश्यन्ति सामान्यरूपतया, इह ज्ञानदर्शनयोः सम्पूर्णलोकविषयत्वे बहु वक्तव्यं, तत्तु नोच्यते, ग्रन्थविस्तरभयात्, केवलं 'निर्विशेषं विशेषाणां, ग्रहो दर्शनमुच्यते। विशिष्टग्रहणं ज्ञानमेवं सर्वत्रगं द्वय ॥१॥'-मित्यनया दिशा स्वयमेवाभ्यूह्यं, धर्म्मसङ्ग्रहणीटीका च परिभावनीया, यतश्चैवं केवलचारित्रिणः केवलज्ञानिनश्च तस्मात्ते केवलिनो भवन्ति, केवलमेषां विद्यते इति केवलिनः इति व्युत्पत्तेः, अहोऽत्राकाण्ड एव केवलचारित्रिण इति किमर्थमुक्तं ?, उच्यते, केवलचारित्रप्राप्तिपूर्विका नियमतः केवलज्ञानावाप्तिरिति न्यायदर्शनार्थमित्यदोषः । तदेवं व्याख्यातो लोकस्येत्यादिरूपः सूत्रप्रथमश्लोकः ॥

साम्प्रतमत्रैव चालनाप्रत्यवस्थाने विशेषतो निदर्श्येते, तत्र लोकस्योद्योतकरानित्युक्तं, अत्राह—अशोभनमिदं यदुक्तं-लोकस्येति, लोको हि चतुर्दशरज्ज्वात्मकत्वेन परिमितः, केवलोद्योतश्चापरिमितो, लोकालोकव्यापकत्वात्, वक्ष्यति-'केवलियनाणलंभो लोगालोगं पगासेइ' ततः सामान्यतः उद्योतकरान् यदिवा लोकालोकयोरुद्योतकरानिति वाच्यं, नतु लोकस्येति, तदयुक्तं, अभिप्रायापरिज्ञानात्, इह लोकशब्देन पञ्चास्तिकाया एव गृह्यन्ते, ततः आकाशास्तिकायभेद एव लोक इति न पृथगुक्तः, न चेतदनार्षं, यत उक्तम्-"पंचत्थिकायमइओ लोगो' इत्यादि । अपरस्त्वाह-लोकस्योद्योतकरानित्येतावदेव साधु, धर्मतीर्थकरानिति न वक्तव्यं, गतार्थत्वात्, तथाहि-ये लोकस्योद्योतकरास्ते धर्मतीर्थकरा एवेति, उच्यते, इह लोकैकदेशे ग्रामैकदेशे ग्रामशब्दवत् लोकशब्दप्रवृत्तिदर्शनात् मा भूत्तदुद्योतकरेष्ववधिविभङ्गज्ञानिष्वर्कचन्द्रादिषु वा सम्प्रत्यय

इति तद्व्यवच्छेदार्थं धर्म्मतीर्थकरानित्युक्तं। आह–यद्येवं धर्म्मतीर्थकरानित्येतावदेवास्तु, लोकस्योद्योतकरानिति न वाच्यं, उच्यते, इह लोके येऽपि नद्यादिविषमस्थानेषु मुधिकया धर्म्मार्थमवतरणतीर्थकरणशीलास्तेऽपि धर्म्मतीर्थकरा भण्यन्ते, ततो मा भूदतिमुग्धबुद्धीनां तेषु सम्प्रत्यय इति तदपनोदाय लोकस्योद्योतकरानित्याह। अपरस्त्वाह–जिनानित्यतिरिच्यते, तथाहि–यथोक्तप्रकारा जिना एव भवन्तीति, उच्यते, इह केषांचिदिदं दर्शनं–"ज्ञानिनो धर्म्मतीर्थस्य, कर्त्तारः परमं पदम्। गत्वाऽऽगच्छंति भूयोऽपि, भूशं (भवं) तीर्थनिकारतः ॥ १ ॥" इत्यादि, ततस्तन्मतपरिकल्पितेषु यथोक्तप्रकारेषु मा भूत् सम्प्रत्यय इति तद्व्यवच्छेदार्थं जिनानित्याह, जिना नाम रागादिजेतारः, ते च कुनयपरिकल्पिता जिना न भवन्तीति, तीर्थनिकारतः पुनरिह भवाङ्कुरोत्पादनाद्, अन्यथा स न स्यात्, बीजाभावात्, तथा चोक्तमन्यैरपि–"अज्ञानपांशुपिहितं पुरातनं कर्म्मबीजमविनाशि। तृष्णाजलाभिषिक्तं मुञ्चति जन्माकुरं जन्तोः ॥ १ ॥ दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुरः। कर्म्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ २ ॥" आह–यद्येवं जिनानित्येतावदेवास्तु, लोकस्योद्योतकरानित्याद्यतिरिच्यते, उच्यते, इह प्रवचने सामान्यतो विशिष्टश्रुतधरादयोऽपि जिना उच्यंते, तद्यथा–श्रुतजिना अवधिजिना मनःपर्यायज्ञानिजिनाश्छद्मस्थवीतरागाश्च, ततो मा भूत्तेषु सम्प्रत्यय इति तदपनोदाय लोकस्योद्योतकरानित्याद्यप्यदुष्टं। अपरस्त्वाह–अर्हत इति न वाच्यं, न खल्वनन्तरोदितस्वरूपा अर्हद्व्यतिरेकेणापरे सम्भवन्ति, उच्यते, अर्हतामेव विशेष्यत्वात्र दोषः, आह–यद्येवं तर्हि अर्हत इत्येतावदेवास्तु, लोकस्योद्योतकरानित्यादि पुनरपार्थकं, न, तस्य विशेषणत्वात्, विशेषणसाफल्यस्य च प्रतिपादितत्वादिति। अपरस्त्वाह–केवलिन इति न वाच्यं, यथोक्तस्वरूपाणामर्हतां केवलित्वव्यभि-

चाराभावात्, सति च व्यभिचारसम्भवे विशेषणोपादानं फलवत्, तथा चोक्तं–"सम्भवे व्यभिचारे च विशेषणमर्थवद् भवति', यथा नीलोत्पलमिति, व्यभिचाराभावे तु तदुपादीयमानमपि न कंचनार्थं पुष्णाति, यथा कृष्णो भ्रमरः शुक्ला बलाकेति, तस्मात् केवलिन इत्यतिरिच्यते, न, अभिप्रायापरिज्ञानात्, इह केवलिन एव यथोक्तस्वरूपा अर्हन्तो, नान्ये इति नियमार्थेन स्वरूपज्ञापनार्थमिदं विशेषणमित्यनवद्यं, न खल्वेकान्ततो व्यभिचारसम्भवे एव विशेषणोपादानं फलवत्, उभयपदव्यभिचारे एकपदव्यभिचारे स्वरूपपरिज्ञापने च शिष्टोक्तिषु तत्प्रयोगदर्शनात्, तत्र उभयपदव्यभिचारे यथा नीलोत्पलमिति, एकपदव्यभिचारे अप् द्रव्यं पृथिवी द्रव्यमिति, स्वरूपपरिज्ञापने यथा परमाणुरप्रदेश इत्यादि, तस्मात्केवलिन इत्यदुष्टं। आह-यद्येवं केवलिन इत्येव सुन्दरं, शेषं तु लोकस्योद्योतकरानित्यादि किमर्थमिति, उच्यते, इह श्रुतकेवलिप्रभृतयोऽपि केवलिनो विद्यन्ते, तन्मा भूत्तेषु सम्प्रत्यय इति तत्प्रतिक्षेपार्थं लोकस्योद्योतकरानित्याद्यप्युक्तं। एवं व्यादिसंयोगापेक्षया विचित्रनयमताभिज्ञेन स्वधिया विशेषणसाफल्यं वाच्यमिति कृतं प्रसङ्गेन, प्रयासस्य गमनिकामात्रफलत्वात् ॥

सम्प्रति यदुक्तं 'कीर्तयिष्यामि' इति कीर्तनं कुर्वन्नाह सूत्रकृत्—

उसभमजिअं च वंदे संभवमभिणंदणं च सुमइं च। पउमप्पहं सुपासं जिणं च चंदप्पहं वंदे ॥ २ ॥
सुविहिं च पुप्फदंतं सीयल सिज्जंस वासुपुज्जं च। विमलमणंतं च जिणं धम्मं संतिं च वंदामि ॥ ३ ॥
कुंथुं अरं च मल्लिं वंदे मुणिसुव्वयं नमिजिणं च। वंदामि रिट्ठनेमिं पासं तह वद्धमाणं च ॥ ४ ॥ (सूत्राणि)

आसां तिसृणामपि सूत्रगाथानां व्याख्या-इह भगवतामर्हतां नामानि अन्वर्थमधिकृत्य सामान्यलक्षणतो विशेषल-

क्षणतश्च वाच्यानि, तत्र सामान्यलक्षणमिदम्-'वृष उद्वहने' एष आगमिको धातुः, समग्रसंयमभारोद्वहनात् वृषभः, सर्व एव भगवन्तो यथोक्तरूपा इति विशेषहेतुप्रतिपादनायाह—

ऊरूसु उसभलंछण उसभं सुमिणम्मि तेण उसभजिणो।

जेण भगवतो दोसुवि ऊरूसु उसभा उप्पराहुत्ता लंछणभूया, जेणं च मरुदेवाए भयवतीए चोद्दसण्हं महासुमिणाणं पढमं उसभो सुमिणे दिट्ठो तेण तस्स उसभत्ति नामं कयं, सेसतित्थयराणं मायरो पढमं गयं पासंति, तओ वसभो। अक्षरगमनिका त्वेवं-यतो भगवत ऊर्वोः वृषभावूर्ध्वमुखौ लाञ्छनं मरुदेवी च भगवती स्वप्ने प्रथमं ऋषभं दृष्टवती तेन भगवान् ऋषभजिनः। साम्प्रतमजितः, तस्य सामान्येनाभिधाननिबन्धनमिदं-परीषहोपसर्गादिभिर्न जितः अजितः, सर्व एव च भगवन्तो यथोक्तस्वरूपा इति विशेषनिबन्धनमभिधित्सुराह—

अक्खेसु जेण अजिआ जणणी अजितो जिणो तम्हा॥ १०९२॥

अक्षेषु-अक्षविषयेषु येन कारणेन भगवतो जननी अजिता गर्भस्थे भगवत्यभूत् तस्मादजितो जिनः, अत्र वृद्धसम्प्रदायः-भयवतो अम्मापियरो जूयं रमंति, पढमं राया जिणियाइतो, जाहे भयवं आयातो ताहे देवी जिणाइ, नो राया, ततो अक्खेसु कुमारप्पभावा देवी अजियत्ति अजिओ नामं कयं॥ तथा सम्भवन्ति-प्रकर्षेण भवंति चतुस्त्रिंशदतिशयगुणा यस्मिन् स सम्भवः, सर्व एव च भगवन्तो यथोक्तस्वरूपा इति विशेषनिबन्धनमभिधित्सुराह—

ऋषभदीनां सामान्यविशेषार्थः

अभिसंभूया सासत्ति संभवो तेण वुचई भयवं ।

अभिसम्भूतानि–सम्यक् भवन्ति स्म सस्यानि तस्मिन् गर्भजाते तेन कारणेन भगवान् सम्भव इत्युच्यते, 'पुन्नाम्नी'त्यधिकरणे घप्रत्ययः, तथा च वृद्धसम्प्रदायः–गब्भगए जेण अहिगा सस्सनिप्फत्ती जाया तेण संभवो इति ॥ तथा अभिनन्द्यते देवेन्द्रादिभिरित्यभिनन्दनः, सर्व एव भगवन्तो यथोक्तस्वरूपा इत्यतो विशेषहेतुप्रतिपादनायाह—

अभिनंदेइ अभिक्खं सक्को अभिनंदणो तेण ॥ १०९३ ॥

शक्रो गर्भादारभ्याभिक्षणं–प्रतिक्षणं अभिनन्दितवानिति अभिनन्दनः, 'कृद्बहुल मिति वचनात् कर्म्मण्यनट्, तथा च वृद्धसम्प्रदायः–गब्भप्पभिई अभिक्खणं सक्केण अभिनंदियाइतो तेण से अभिणंदणोत्ति नामं कयं । इदानीं सुमतिः, तस्य सामान्याभिधाननिबन्धनमिदम्–शोभना मतिरस्येति सुमतिः, सर्व एव च भगवंतः सुमतय इति विशेषनिबन्धनप्रतिपादनार्थमाह—

जणणी सव्वत्थ विणिच्छिएसु सुमइत्ति तेण सुमतिजिणो ।

येन कारणेन गर्भगते भगवति सर्वेषु विनिश्चयेषु–कर्त्तव्येषु सुमतिः–अतीव मतिः सम्पन्ना जाता तेन कारणेन भगवान् सुमतिजिनः, जननीसुमतिहेतुत्वात् सुमतिरिति भावः, शोभना मतिरस्मादभूदिति व्युत्पत्तेः, तथा च वृद्धसम्प्रदायः–जणणी गब्भगए सव्वत्थ विणिच्छएसु अतीव मइसम्पन्ना जाया, दोण्हं सवत्तीण मयपइयाणं ववहारो छिन्नो, जहा मम पुत्तो भविस्सइ, सो जोव्वणत्थो एयस्स असोगवरपायवस्स अहे ववहारं तुब्भं छिंदिहिति, ताव एगयाओ भवह, इयरी भणइ–

एवं भवतु, पुत्तमाया नेच्छइ, भणइ–ववहारो छिज्जउ, ततो भावं नाऊण छिन्नो ववहारो, दिन्नो तीसे पुत्तो, एवमादी गब्भगुणेणं जणणीए सुमती जायत्ति सुमइनामं कयं। इदानीं पद्मप्रभः, तस्य सामान्यतोऽभिधानकारणमिदं–निष्पङ्कतया पद्मस्येव प्रभा यस्य स पद्मप्रभः, तत्र सर्वे एव भगवन्तो यथोक्तस्वरूपाः ततो विशेषकारणमाह—

पउमसयणम्मि जणणीएँ डोहलो तेण पउमाभो ॥ १०९४ ॥

येन कारणेन तस्मिन् भगवति गर्भगते जनन्या देव्या पद्मशयनीये दौर्हृदमभूत्, तच्च देवतया सम्पादितं, भगवांश्च स्वरूपतः पद्मवर्णस्तेन कारणेन पद्मप्रभ इतिनामविषयीकृतः। सम्प्रति सुपार्श्वः, तस्यायमोघतो नामान्वर्थः, शोभनानि पार्श्वाणि यस्यासौ सुपार्श्वः, तत्र सर्वे एव भगवन्त एवंभूतास्ततो विशिष्टं नामान्वर्थमभिधित्सुराह—

गब्भगए जं जणणी जाय सुपासा तओ सुपासजिणो।

यतो गर्भगते भगवति तत्प्रभावतो जननी जाता सुपार्श्वा ततो जिनः सुपार्श्व इतिनामविषयीकृतः, एवं सामान्याभिधानं विशेषाभिधानं चाधिकृत्यान्वर्थाभिधानविस्तरो भावनीयः, इह पुनः सुज्ञानत्वात् ग्रन्थविस्तरभयाच्च नाभिधीयते। सम्प्रति चन्द्रप्रभः–चन्द्रस्येव प्रभा–ज्योत्स्ना सौम्यमस्येति चन्द्रप्रभः, तत्र सर्वेऽपि तीर्थकृतश्चन्द्रवत् सोमलेश्याकास्ततो विशेषमाह—

जणणीइ चंदपिअणम्मि डोहलो तेण चंदाभो ॥ १०९५ ॥

येन कारणेन भगवति गर्भगते जनन्याः चन्द्रपाने दौर्हृदमजायत चन्द्रसदृशवर्णश्च भगवान् तेन चन्द्राभः–चन्द्रप्रभ-

इति विश्रुतः। सम्प्रति सुविधिः, शोभनो विधिरस्येति सुविधिः; विधिर्नाम सर्वत्र कौशलं, तत्र सर्वे एव भगवन्त इदृशा इति विशेषकारणमाह—

सव्वविहीसु अ कुसला गब्भगए तेण होइ सुविहिजिणो ।

भगवति गर्भगते जननी सर्वविधिषु कुशलाऽभवत् तेन सुविधिजिन इति नाम कृतं॥ सम्प्रति शीतलः, सकलसत्त्वसन्तापकरणविरहादाल्हादजननाच्च शीतलः, तत्र सर्वेऽपि भगवन्तः शत्रूणां मित्राणां चोपरि शीतगृहसमानास्ततो विशेषमाह—

पिउणो दाहोवसमो गब्भगए सीअलो तेण ॥ १०९६ ॥

भगवतः पितुः पूर्वोत्पन्नोऽसद्दशः पित्तदाहोऽभवत्, स चौषधैर्नानाप्रकारैर्नोपशाम्यति, भगवति तु गर्भगते देव्याः परामर्शे स दाह उपशान्तः, तेन शीतल इति नाम। इदानीं श्रेयान्, समस्तभुवनस्य हितकारित्वात् प्रशस्यतरः श्रेयान्, प्राकृतशैल्या छान्दसत्वात् सेयंस इत्युच्यते, तत्र सर्वेऽपि भगवन्तस्त्रैलोक्यस्यापि श्रेयांस इति विशेषमाह—

महरिहसिज्जारुहणम्मि डोहलो तेण होइ सिज्जंसो ।

तस्य राज्ञः पितृपरम्परागता देवतापरिगृहीता शय्या अर्च्यते, यस्तामाश्रयति तस्योपसर्गं देवता करोति, गर्भगते च भगवति देव्या दौर्हृदमजायत–शय्यामारोहामि, तत्रोपविष्टा, देवता समारसितुमपक्रान्ता, सा हि तीर्थकरनिमित्तं देवतया रक्षिता, एवं गर्भप्रभावतो देव्याः श्रेयो जातमिति श्रेयांस इति नाम कृतम्। साम्प्रतं वासुपूज्यः–वासवो–देवाः तेषां पूज्यः वासुपूज्यः, सर्व एव भगवन्त इदृशा इति विशेषमाह—

गब्भगते तं वसूहिं पूएई तेण वसुपुज्जो ॥ १०९७ ॥

तस्मिन् भगवति गर्भगते वासवो-देवराजः अभीक्ष्णं जननीं पूजयति, तेन वासुपूज्य इति नाम, पृषोदरादित्वादिष्टरूपनिष्पत्तिः, अथवा वासवो नाम वैश्रमणः, स गर्भगते भगवति तत् राजकुलमभीक्ष्णं वसुभी-रत्नैः पूजयति पूरयति तेन कारणेन वासुपूज्यः। सम्प्रति विमलः, विगतो (मलो) विगतमलो विमलः, ज्ञानादियोगाद्वा मलः, तत्र सर्वेऽपि भगवन्त एवंभूता अतो विशेषमाह—

विमलतणु-बुद्धि जणणी गब्भगए तेण होइ विमलजिणो ॥

गर्भगते भगवति जनन्यास्तनुः-शरीरं बुद्धिश्च विमला, तद्दौर्हृदं चेत्थमजायत, यथाऽहं विमला भवामि, तेन कारणेन नामतो भवति विमलजिनः। साम्प्रतमनन्तः, अनन्तकर्मांशजयाद् अनन्तानि वा ज्ञानादीन्यस्येत्यनन्तः, तत्र सर्वेऽपि भगवन्त इदृशा अतो विशेषमाह—

रयणविचित्तमणंतं दामं सुमिणे तओऽणंतो ॥ १०९८ ॥

रत्नविचित्रं-रत्नखचितं अनन्तं-अतिमहाप्रमाणं दाम स्वप्ने जनन्या दृष्टं अतोऽनन्त इति। सम्प्रति धर्म्मः, दुर्गतौ प्रपतन्तं सत्त्वसङ्घातं धारयतीति धर्म्मः, तत्र सर्वेऽपि भगवन्त इदृशाः ततो विशेषमाह—

गब्भगए जं जणणी जाय सुधम्मत्ति तेण धम्मजिणो।

भगवति गर्भगते येन कारणेन विशेषतो जननी जाता सुधर्मा-दानदयादिरूपशोभनधर्म्मपरायणा तेन नामतो

# आवश्यकस्य मलयगिरीयाया वृत्तेर्भागत्रयस्य विषयानुक्रमः ।


| विषयः | पत्राङ्कः |
|---|---|
| प्रयोजनानुपन्याससाफल्यम्--( वचनप्रामाण्यम् ) ... | १ |
| मङ्गलचर्चा, नामादिलक्षणानि, द्रव्यमङ्गले नयचर्चा, मङ्गलोपयोगे मङ्गलता, नामादीनां भिन्नता, नामाद्येकान्तनिरासः । | २ |
| द्रव्यार्थिकपर्यायार्थिकविचारः । ( मल्लवादिसिद्धसेनमते ) । | १२ |
| नन्दिनिक्षेपाः । ... ... ... ... | १२ |
| ज्ञानपञ्चकस्वरूपं ( गा. १ ) प्रत्यक्षपरोक्षविभागः, आत्मनो ज्ञातृत्वं, इन्द्रियाणां करणत्वेऽपि व्यवधायकता, केवले शेषज्ञानाभावसिद्धिः । ... ... ... | १३ |
| ज्ञानपञ्चकपार्थक्यसिद्धिः । ... ... ... | १७ |

| विषयः | पत्राङ्कः |
|---|---|
| ज्ञानपञ्चकक्रमसिद्धिः, एकेन्द्रिये श्रुतसिद्धिः, लक्षणादिभेदैर्मतिश्रुतयोर्भेदः । ... ... ... | २० |
| अवग्रहाद्यो मतिभेदाः ( गा. २ )। ( संशयादीहाया भेदः ) | २२ |
| अवग्रहादीनां स्वरूपम् । ( गा. ३ ) व्यञ्जनावग्रहे ज्ञानं, चक्षुर्मनसोरप्राप्यकारिता । ... ... .... | २३ |
| अवग्रहादीनां कालमानम् । ( गा. ४ ) । ... ... | २४ |
| शब्दादीनां प्राप्ताप्राप्तबद्धस्पृष्टतादि ( गा. ५ ) । ( शब्दस्याप्राप्यकारितानिरासः ) ... ... ... | २७ |
| शब्दस्याकाशगुणत्वमपास्तम् । ... ... ... | २८ |

# आवश्यकस्य मलयगिरीयाया वृत्तेर्भागत्रयस्य विषयानुक्रमः ।


| विषयः | पत्राङ्कः |
|---|---|
| प्रयोजनाद्युपन्याससाफल्यम्–( वचनप्रामाण्यम् ) ... | १ |
| मङ्गलचर्चा, नामादिलक्षणानि, द्रव्यमङ्गले नयचर्चा, मङ्गलोपयोगे मङ्गलता, नामादीनां भिन्नता, नामाद्येकान्तनिरासः । | २ |
| द्रव्यार्थिकपर्यायार्थिकविचारः । ( मल्लवादिसिद्धसेनमते ) । | १२ |
| नन्दिनिक्षेपाः । ... .... ... ... | १२ |
| ज्ञानपञ्चकस्वरूपं ( गा. १ ) प्रत्यक्षपरोक्षविभागः, आत्मनो ज्ञातृत्वं, इन्द्रियाणां करणत्वेऽपि व्यवधायकता, केवले शेषज्ञानाभावसिद्धिः । ... ... ... | १३ |
| ज्ञानपञ्चकपार्थक्यसिद्धिः । ... ... ... | १७ |
| ज्ञानपञ्चकक्रमसिद्धिः, एकेन्द्रिये श्रुतसिद्धिः, लक्षणादिभेदैर्मतिश्रुतयोर्भेदः । ... ... ... | २० |
| अवग्रहादयो मतिभेदाः ( गा. २ )। ( संशयादीहाया भेदः ) | २२ |
| अवग्रहादीनां स्वरूपम् । ( गा. ३ ) व्यञ्जनावग्रहे ज्ञानं, चक्षुर्मनसोरप्राप्यकारिता । ... ... .... | २३ |
| अवग्रहादीनां कालमानम् । ( गा. ४ ) । ... ... | २४ |
| शब्दादीनां प्राप्ताप्राप्तबद्धस्पृष्टतादि ( गा. ५ ) । ( शब्दस्याप्राप्यकारितानिरासः ) ... ... ... | २७ |
| शब्दस्याकाशगुणत्वमपास्तम् । ... ... ... | २८ |

| विषयः | पत्राङ्कः |
| --- | --- |
| इन्द्रियविषयाणामात्माङ्गुलमेयता, प्रकाश्यप्रकाशकविषयमानभेदः। ... ... ... ... | २९ |
| मिश्रपराघातशब्दश्रवणम् ( गा. ६ )। ... ... | ३१ |
| शब्दपुद्गलानां ग्रहणनिसर्गौ, ( गा. ७ )। ... ... | ३२ |
| त्रिविधेन शरीरेण ग्रहणं भाषा च, ( गा. ८ )। भाषाया ग्रहणमोक्षौ, भेदाश्च ( गा. ९ )। ... ... | ३४ |
| भाषाया लोकव्याप्तिः, पूरणरीतिश्च, ( गा. १०–११ )। ( जैनसमुद्घातरीत्या न व्याप्तिः )। ... ... | ३५ |
| आभिनिबोधिकस्यैकार्थिकानि ( गा. १२ ) ... ... | ३८ |
| सत्पदादीनि द्वाराणि ( गा. १३–१४ )। ( सम्यक्त्वे व्यवहारनिश्चयौ )। ( क्रियानिष्ठयोर्भेदाभेदौ )। ( अवगाहस्पर्शनयोर्भेदः )। ... ... ... | ३९. |
| अष्टाविंशतिर्भेदाः। ( द्रव्यक्षेत्रकालभावविचारः )। श्रुतज्ञानकथनप्रतिज्ञा। ( गा. १६ )। ... ... | ४४ |
| यावदक्षरं प्रकृतिः, अशक्तिर्भणने। ( गा. १७–१८ ) | ४५ |
| अक्षराद्या भेदाः, ( गा. १९ ) ( अक्षरभेदाः )। अनक्षरश्रुतम् ( गा. २० ) अङ्गानङ्गप्रविष्टविचारः। ... | ४६ |
| शास्त्रलाभरीतिः ( गा. २१ )। बुद्धिगुणाः ( गा. २२ )। श्रवणविधिः (गा.२३)। अनुयोगविधिः, (३गा.२४)। | ४९ |
| अवधेः प्रकृतयः, ( गा. २५ )। ( यावत्प्रकृतिभणनेऽशक्तिः ( गा. २६ )। ... ... ... | ५० |
| अवध्यादीनि द्वाराणि ( गा. २७–२८ )। अवधेर्निक्षेपाः, ( गा. २९ )। ... ... ... | ५१ |
| अवधेर्जघन्यं क्षेत्रम् ( गा. ३० )। ... ... | ५२ |

| विषयः | पत्राङ्कः |
|---|---|
| अवधेरुत्कृष्टं क्षेत्रम्, ( गा. ३२ ) । षोढाऽग्निजीवावस्थानम्, सूचिश्रेणित्वादेशः । ... | ५३ |
| अवधेः क्षेत्रकालप्रतिबन्धः ( गा. ३२–३५ ) । कालादिवृद्धिनियमः ( गा. ३६ ) । क्षेत्रस्य सूक्ष्मता, ( गा. ३७ ) । ... | ५४ |
| अवधेः प्रस्थापकनिष्ठापकौ ( गा. ३८ ) । द्रव्यक्षेत्रवर्गणाः ( गा. ३९–४० ) । ... | ५७ |
| गुरुलघ्वादीनि द्रव्याणि ( गा. ४१ ) । अवधेर्द्रव्यक्षेत्रादिप्रतिबन्धः, ( गा. ४२–४३ ) । ... | ६१ |
| परमावधेर्द्रव्यादि ( गा. ४४–४५ ) ... | ६३ |
| तिर्यङ्नरकयोरवधिः, ( गा. ४६–४७ ) ... | ६४ |
| देवानामधस्तिर्यगूर्ध्वमवधिः, ( गा. ४८–५१ । ) आयुर्मानेनावधिः, ( गा. ५२ ) । ... | ६५ |

| विषयः | पत्राङ्कः |
|---|---|
| उत्कृष्टाद्यवधीनां गतिषु सत्ता, संस्थानं च ( गा.५३–५५ ) । | ६७ |
| आनुगामिकेतरावधी, (अन्तगतादिभेदाः), ( गा. ५६ ) । | ६८ |
| क्षेत्रकालद्रव्यपर्यवेष्ववस्थानम्, ( गा. ५७–५८ ) ... | ७० |
| क्षेत्रकालद्रव्यपर्यायाणां वृद्धिहानी, ( गा. ५९ ) । ... | ७१ |
| स्पर्धकावधिः, ( प्रतिपात्यप्रतिपातिनौ ) ( गा. ६०–६१ ) । | ७२ |
| बाह्यान्तरावध्योः प्रतिपातोत्पातौ, ( गा. ६२–६३ ) द्रव्यपर्यायप्रतिबन्धः ( गा. ६४ ) । ... | ७३ |
| साकारादीनि ( गा. ६५ ) । अवधेरबाह्याः ( गा. ६६ ) । | ७४ |
| सम्बद्धासम्बद्धाः (गा. ६७) । गत्याद्यतिदेशः । (गा. ६८) । | ७५ |
| आमर्शौषध्याद्याः ( ६९–७० ) । ... | ७८ |
| वासुदेवचक्र्यर्हतां बलम्, ( गा. ७१–५ ) । ( क्षीराश्रवाद्याः ) । ... | ७९ |
| मनःपर्यायस्वरूपम्, ( गा. ७६ ) । ... | ८१ |

| विषयः | पत्राङ्कः |
|---|---|
| केवलज्ञानस्वरूपम्, ( गा. ७७ )। ... ... | ८२ |
| प्रज्ञापनीयभापणं द्रव्यश्रुतता च, ( गा. ७८ )। ( सिद्धानां १५ भेदाः )। ... ... | ८३ |
| श्रुतेनाधिकारः, प्रदीपदृष्टान्तोऽनुयोगे, ( पीठिका .), ( गा. ७९ )। आवश्यकनिक्षेपाः ( अगीतार्थासंविग्नस्य रत्नवणिजो ज्ञातो, एकार्थिकानि,.. श्रुतनिक्षेपाः, पञ्चधा सूत्राणि, स्कन्धनिक्षेपाः, अर्थाधिकाराः, उपक्रमादीनां भेदप्रभेदाः, ब्राह्मण्यादीनां दृष्टान्ताः, गङ्गाप्रवाहदर्शिकथा, पूर्वानुपूर्व्याद्याः, प्रमाणागमलोकोत्तरादिभेदाः, अध्ययनादीनां निक्षेपाः, मध्यमङ्गलचर्चा। | ८६ |
| उपोद्घातमङ्गलम्, ( गा. ८० )। द्रव्यभावतीर्थे, सुखावतारादिभेदाः।... ... ... ... | ९७ |
| श्रीवीरनमस्कारः, ( गा. ८१ )। ... ... | ९९ |

| विषयः | पत्राङ्कः |
|---|---|
| गणधरतद्वंशवाचकवंशप्रवचनानां नमस्कारः; ( गा. ८२)। निर्युक्तिकथनप्रतिज्ञा, ( गा. ८३ )। निर्युक्तिविषयाणि शास्त्राणि। ( ८४–८६ )। ... ... | १०० |
| गुरुपरम्परागता सामायिकनिर्युक्तिः, ( गा. ८७ )। ( द्रव्यपरम्परायां दृष्टान्तः )। ... ... | १०१ |
| निर्युक्तत्वेऽप्यर्थानां विभाषणम्, ( गा. ८८ )। तपोनियमज्ञानवृक्षः कुसुमवृष्टिर्मन्थनं च ( गा. ८९–९० )। | १०४ |
| सूत्रकृतो हेतवः, ( गा. ९१ )। अर्थभाषका अर्हन्तः सूत्रकृतो गणधराः, ( गा. ९२ )। श्रुतचरणसारः ( गा. ९३ )। ... ... ... ... | १०६ |
| अचरणस्य न मोक्षः, पोतदृष्टान्तः, सापेक्षे ज्ञानक्रिये। ( गा. ९४–१०३ )। ... ... ... | १०७ |

| विषयः | पत्राङ्कः |
|---|---|
| क्षये केवलं, उत्कृष्टकर्मस्थितौ नैकमपि, कोटाकोट्यन्तर्लाभः। (गा. १०४–१०६)। ... ... ... | १११ |
| पल्यादयो दृष्टान्ताः, (गा. १०७)। (अल्पबहुबन्धचर्चा)। | ११३ |
| अनन्तानुबन्ध्यादयः, (गा. १०८–१११)। अतिचारे मूलच्छेदे च हेतवः, । (गा. ११२) ... ... | ११६ |
| चारित्रपञ्चकम्, (गा. ११३–१५)। (परिहारे २० द्वाराणि)। ... ... ... ... | ११८ |
| उपशमश्रेणिः, (गा. ११६)। सूक्ष्मसम्परायः। (गा. ११७)। ... ... ... ... | १२३ |
| कषायसामर्थ्यम्, (गा. ११८–२०)। ... ... | १२५ |
| क्षपकश्रेणिः, (गा. १२१–२३)। (गाथात्रयस्यासमीचीनता)। ... ... ... ... | १२६ |
| केवलस्याशेषविषयता, (गा. १२४)। जिनप्रवचनादीनि, (गा. १२५) एकार्थिकानि, (गा. १२६–१२८)। | १२८ |
| अनुयोगनिक्षेपाः, ७ (गा. १२९)। ... ... | १३० |
| काष्ठादिदृष्टान्तैर्भाषकाद्याः, (गा. १३२)। ... | १३८ |
| व्याख्यानविधौ गवादिदृष्टान्ताः, (गा. १३३) ... | १३९ |
| शिष्यगुणदोषाः, शैलघनाद्या दृष्टान्ताः, (गा. १३४–६)। | १४१ |
| उद्देशादीनि उपोद्घातद्वाराणि २६। (गा. १३७–१३८)। | १४६ |
| उद्देशनिक्षेपाः ८ (गा. १३९)। निर्देशनिक्षेपाः (गा. १४०)। निर्देशे नयाः, (गा. १४१)। ... | १४८ |
| निर्गमनिक्षेपाः ६, (गा. १४२)। ... ... | १५१ |
| नयसारभवः, (गा. १४३–४४। १–२ मू० भा०)। | १५२ |
| कुलकरवक्तव्यता, हस्तिनो नीतयश्च (गा. १४५–१६६)। ३ मू० भा०)। ... ... ... | १५३ |

विषयः — पत्राङ्कः

श्रीऋषभभवाः, २०स्थानकानि, श्रीऋषभवक्तव्यता, अभिषेकः, वंशस्थापना ( गा. १८५–१८६ ) । वृद्धिः विवाहः, नृपत्वं उमाद्याः, आहाराद्याः ( गा. १८७–२३० ) । ... १५७, १९२

सम्बोधनादीनि २१, लोकान्तिकाः सांवत्सरिकदानं राजानः कुमाराश्च तपःकर्म ज्ञानक्षोणि साधुसाध्वीमानं गणधरा गणः पर्यायः सर्वायुः । ( गा. २३१–२३५ ) । ... २०१

ऋषभदीक्षा नमिविनमी, विद्याधरनिकायाः १६, तापसाः पारणं श्रेयांसवृत्तं पारणकानां स्थानानि दातारः, आदित्यमण्डलं, धर्मचक्रं, चक्रोत्पातः, मरुदेवीमोक्षः, मरीचिदीक्षा, षट्खण्डसाधनं, सुन्दरीदीक्षा, ९९भ्रातृदीक्षा, बाहुबलिदीक्षा, ( गा. ३३६–३४९ । ३७ भा. ) । २१५

परिव्राजकता, अवग्रहाः ५, माहनाः, तीर्थकृच्चक्रिदशार्हत्वानि, चक्रिणो वासुदेवाः, जिनान्तराणि, मरीचिमानः, ऋषभनिर्वाणं, अष्टापदतीर्थं भरतकेवलं दुर्भाषणं श्रीवीरभवाः । ( गा. ३५०–४५७ ) । ... ... २३३

स्वप्ना अपहारः निश्चलता अभिग्रहः जन्म नाम भीषणं लेखशाला विवाहः प्रियदर्शना दानं लोकान्तिकाः, दीक्षामहः सिद्धनमस्कारपूर्वं पापाकरणनियमः, कुमारग्रामे गोपोपसर्गः कोल्लाके दिव्यानि ( लोहार्यः ), शूलपाणिः स्वप्नदशकं अच्छन्दकः, चण्डकौशिकः प्रदेशिमहिमा कम्बलशम्बलौ पुष्यः, गोशालः, नियतिग्रहः, पाटकदाहः, उपहासः मुनिचन्द्रः, सोमाजयन्त्यौ मनुष्यमांसं पथिकाग्निः मुखत्रासः, मण्डपदाहः मेघः अनार्योदनं नन्दिषेणः, विजयाप्रगल्भे, वाहनं अयस्कारः यक्षः तामली लोकावधिः पराङ्मुखस्थानं कटपूतना वग्गूरः तिलस्तम्बः, वैश्यायनः, शङ्खगणराजः आनन्दः

| विषयः | पत्राङ्कः |
| --- | --- |
| प्रतिमाः पेढालः सङ्गमकः सुखसातप्रश्नः कौशाम्बी चमरोत्पातः मेण्ढिकः अभिग्रहः स्वातिदत्तः ऋजुवालुका तपः महासेनवनं महिमा। (गा. ४५८–५४२। ४६–११४ भा.। ... ... ... | २५२ |
| समवसरणादीनि द्वाराणि, करणनियमानियमौ देवविधिः, देशनाकालः प्रतिबिम्बानि पर्षदः सामायिकप्रतिपत्तिः तीर्थप्रणामः परमरूपादि संशयच्छेदः वृत्तिदानं बलिः गणधरदेशना (गा. ५४३–५९०)। ... ... | ३०१ |
| गणधराणां नामानि, संशयाः, परिवारः, इन्द्रभूत्युक्तिः, (१२१–१२६ भा.) ... ... ... | ३११ |
| संशयाः तदपगमाः, (६४१। १३२ भा.)। ... | ३१२ |
| गणधराणां जन्मभूमिनक्षत्रगोत्रपर्यायायुर्ज्ञानमोक्षतपांसि, (गा. ६५९)। ... ... ... | ३३७ |
| एकादशधा कालः, चेतनाचेतनस्थितिः, अद्धाकालभेदाः, यथायुष्ककालः, (गा. ६६४)। ... ... | ३४० |
| उपक्रमकाले इच्छाकाराद्याः सामाचार्यः, इच्छाकारः, (गा. ६८१)। मिथ्याकारः (६८७) तथाकारः, (गा. ६९०)। आवश्यकी (६९४) नैषेधिकी (६९६) (१३५–१३६भा.), आपृच्छाद्याः (गा. ६९७)। उपसम्पत् (गा. ७०२)। ... ... ... | ३४१ |
| प्रमार्जननिषद्याक्षकृतिकर्मादीनि (गा. ७१७। १३७ भा.) (हा. १२३)। चारित्रोपसम्पत्, (गा. ७२३)। | ३५१ |
| अध्यवसानाद्या आयुष्कोपक्रमाः, भये सोमिलकथा, दण्डादयो निमित्ते, प्रशस्ताप्रशस्तदेशकालौ, प्रमाणकालः, भावे भङ्गाः। (गा. ७३५)। ... ... ... | ३५५ |

विषयः ... पत्राङ्कः

पुरुषनिक्षेपाः १०, कारणनिक्षेपाः ४, तद्द्रव्यान्यद्रव्ये निमित्तनिमित्तिनौ, समवाय्यसमवायिनौ कर्त्रादि, भावेऽसंयमादि, प्रवृत्तितोऽशरीरत्वान्तं, प्रत्ययेऽवध्यादि लक्षणं १२ सदृशसामान्यादि श्रद्धानादि वा, ( गा. ७५३ ) । ३६३
मूलनयाः, स्यात्पदं, अवधारणविधिः, दिगम्बरीयमतसमीक्षा । ३६९
नैगमलक्षणं, ( मिश्रसामान्यनिरासः ), सद्व्यवहारर्जुसूत्रशब्दसमभिरूढैवम्भूतलक्षणानि, प्रस्थकवसतिप्रदेशदृष्टान्ताः, प्रभेदवत्त्वं । ... ... ... ३७१
वज्रस्वामिवृत्ते शालमहाशाली कौण्डिन्यादयस्तापसाः पुण्डरीककण्डरीकौ दीक्षा साध्व्युपाश्रयावस्थितिः, उत्सारकल्पः, दृष्टिवादानुज्ञा रुक्मिणीदीक्षा विद्याद्वयम्, उत्तरापथे सङ्घनिस्तारः पुर्यामुत्सवः पुष्पावचयः राज्ञः श्रावकता, (गा. ७७२) । ... ... ... ३८३

विषयः ... ... ... पत्राङ्कः

आर्यरक्षितवृत्ते स्वर्णनन्दी पञ्चशैलः इङ्गिनी जीवत्स्वामी प्रभावती गान्धारः गुटिकाशतं युद्धं पर्युषणोपवासः क्षामणं, रक्षितस्य विद्यार्थं पाटलीपुत्रे गमनं, दीक्षा, भद्रगुप्तनिर्यापणा वज्रस्वामिपार्श्वेऽध्ययनं फल्गुरक्षितदीक्षा रथावर्त्तः कुटुम्बदीक्षा वृद्धानुवर्त्तनं पुष्पमित्रत्रयं नयानुयोगानां पार्थक्यं, ( गा. १२४ मू. भा. ) । मथुरायां शक्रागमः, गोष्ठामाहिलवृत्तं, ( गा. ७७७ ) । ... ३९१
निह्नवाधिकारः, १ (१२५–१२६ भा.) २ (१२७–१२८) ३ ( १२९–१३० ) ४ (१३१–१३२ ) ५ (१३३–१३४ ) ६ ( १३५–१४० ) ७ ( १४१–१४४ ) । ४०१
बोटिकनिरासः ( सविस्तरं ) ( १४५–१४८ भा. ) । दोषद्वयादि ७८८ । ... ... ... ४१८

| विषयः | पत्राङ्कः |
| --- | --- |
| अनुगते गपःसंयमादि, सामायिकस्यात्मादि लक्षणं, ( गा. १४९–१५५ ) । ... ... ... | ४२८ |
| प्रतानां द्रव्येष्ववतारः, द्रव्यपर्यायापेक्षया सामायिकं । ... | ४३१ |
| सामायिकस्य भेदाः सम्यक्त्वादीनां भेदाः ( १५० भा. ) गा. ७९५ । ... ... ... ... | ४३३ |
| सन्निहितात्मादेः सामायिकम्, ( गा. ८०३ ) । ... | ४३५ |
| सामायिकप्राप्तिहेतुक्षेत्रादिकालगलादीनि द्वाराणि अलङ्कारादिद्वारान्तानि, निक्षेपः, ( गा. ८२९ ) । ... | ४३६ |
| दृष्टान्तयोगव्यापितादिविचारः, ( गा. ८३० ) । ... | ४५१ |
| अनुकम्पादीनां दोषेऽपि पोलकादयो दृष्टान्ताः, (गा.८४०)। | ४५१ |
| अनुकम्पा धर्मोत्पत्तिहेतवः, यानावरणादिरूपकम्, ( गा. ८४१ ) । ... ... | ४५५ |

| विषयः | पत्राङ्कः |
| --- | --- |
| दृष्टानुभवादो सम्यक्त्वं, ( आनन्दादिश्रावकचरित्राणि ) ( गा. ८४४ ) । ... ... ... | ४५६ |
| वल्कलचीरिवृत्तम् । ... ... ... ... | ४५७ |
| अनुकम्पाद्या हेतवः, तद्दृष्टान्ताश्च वैद्यादयः, अभ्युत्थानादयः, ( गा. ८४९ ) । ... ... ... | ४६० |
| कालमानं, प्रतिपद्यमानादयः, अन्तरं, अविरहविरहौ आकर्षाः स्पर्शना भागः पर्यायाः, दमदन्ताद्या दृष्टान्ताः ( गा. ८७९ ) । ... ... ... | ४६९ |
| इत्युपोद्घातनिर्युक्तिः । | |
| सूत्रस्य दोषा गुणाः, सूत्रस्पर्शिकनिर्युक्तिनयानां समनुगमः, ( गा. ८८६ ) । ... ... ... | ४८२ |
| उत्पत्त्यादिफलान्तं नमस्कारे, समुत्थानवाचनालब्धितः स्वामी निक्षेपास्तेषु नयाः किमादिपद्प्रपा सत्पदादि- | |

| विषयः | पत्राङ्कः |
|---|---|
| नवपद्या च निरूपणं वस्तूनि आरोपणायाः प्रकृतायाः, मार्गोक्ता हेतवः, ( गा. ९०३ )। ... | ... ४८५ |
| देशकनिर्यामकमहागोपत्वानि, ( गा. ९२७ )। | ... ४९४ |
| रागद्वेषकषायेन्द्रियाणां भेदाः स्वरूपं दृष्टान्ताश्च, (गा.९२८) | ४९७ |
| परीषहस्वरूपं, उपसर्गाणां स्वरूपं दृष्टान्ताश्च । | ... ५०८ |
| अनेकधाऽर्हन्निरुक्तयः, नमस्कारफलं च, ( गा. ९२६ ) | ५१० |
| कर्मशिल्पादिसिद्धाः, कर्मसिद्धः, ( गा. ९२९ )। शिल्पसिद्धः। ( गा. ९३० )। विद्यासिद्धः, (गा. ९३१–२ )। मन्त्रे ( ३३ ) योगे. (३४) आगमार्थयोः, ( गा. ३५ ) यात्रायां ( ३६ ) ... | ... ५११ |
| बुद्धिसिद्धस्वरूपं, बुद्धेर्भेदाः, औत्पत्तिक्या लक्षणं दृष्टान्ताश्च, ( गा. ९४४ )। ... ... | ... ५१६ |
| वैनयिक्या लक्षणं तद्दृष्टान्ताश्च ( गा. ९४५ )। | ... ५२३ |
| कर्मजाया लक्षणं तद्दृष्टान्ताश्च, ( गा. ९४६ )। | ... ५२६ |
| पारिणामिक्या लक्षणं तद्दृष्टान्ताश्च, ( गा. ९५१ )। | ... ५२७ |
| तपःकर्मक्षयसिद्धो सिद्धस्वरूपं समुद्घातः शैलेशी शाटीदृष्टान्तः पूर्वप्रयोगादयः लोकाग्रप्रतिष्ठितत्वादि ईषत्प्राग्भारा अवगाहना संस्थानं देशप्रदेशस्पर्शना सिद्धानां लक्षणं सुखं च पर्यायाः, नमस्कारफलम्, (गा.९९२)। | ५३४ |
| आचार्यनिक्षेपादि, ( ग. ९९९ ) ... | ... ५४९ |
| उपाध्यायनिक्षेपादि, (गा. १००७। भा. २५१) साधुनिक्षेपादि, ( गा. १०१७ ) उपसंहारः, संक्षेपविस्तारचर्चा, ( गा. १०२० )। ... ... | ... ५५० |
| क्रमद्वारं प्रयोजनफले निदर्शनाद्वयो दृष्टान्ताः, (गा.१०२५)। | ५५३ |
| सम्बन्धः सामायिकसूत्रं च सव्याख्यानं, निक्षेप्यपदानि, ( गा. १०२९ )। ... ... | ... ५५४ |

| विषयः | पत्राङ्कः |
|---|---|
| नामादिकरणानि, ( भा. १५२–१७४ )। क्षेत्रकालकरणानि, भावेऽत्र श्रुतवद्धानिशीथाख्यानि,(गा. १०३६)। नोश्रुतकरणम्, ( गा. १०३९ )। ... ... | ५५८ |
| कृताकृतादिद्वारसप्तकम्, ( उद्दिष्टोपदेशादिषु )। आलोचनाद्या नयाः, ( गा. १०४० । १७५–१८३ भा. )। | ५६५ |
| देशसर्वघातिघाते सामायिकं, ( गा. १०४१ )। ... | ५७२ |
| भयनिक्षेपाः, अन्तं षोढा, ( १८४–१८५ भा. )। ... | ५७२ |
| सामायिकसूत्रस्यार्थः, सामायिकैकार्थाः निक्षेपा एषाम्, ( गा. १०४५ ) ... ... ... | ५७४ |
| सामायिकस्य पर्यायाः, कर्तृकर्मकरणविचारः, आत्मा कारकः, ( गा. १०४९ ) ... ... ... | ५७५ |
| सर्वस्य निक्षेपाः, ( गा. १०५० )। देशसर्वादि, ( गा. १८६–१८९ भा. )। ... ... ... | ५७६ |
| सावद्यार्थः, ( गा. १०५१ )। द्रव्यभावयोगाः ( गा. १०५३ )। ... ... ... ... | ५७८ |
| प्रत्याख्याने द्रव्यादिभेदाः, ( गा. १०५४ )। यावच्छब्दार्थः, ( गा. १०५५ )। ... .... | ५७९ |
| जीवितनिक्षेपाः, ( गा. १०५६ । १८९–१९० भा. )। | ५८० |
| प्रत्याख्याने १४७ भङ्गाः ( गा. १०५७ )। त्रिकालग्रहणम्, ( गा. १०५८ )। ... ... ... | ५८१ |
| त्रिविधादेरपुनरुक्तता, ( गा. १०५९ )। ... ... | ५८३ |
| द्रव्यभावप्रतिक्रमणोदाहरणे, ( गा. १०६० )। निन्दागर्हयोः, ( १०६१–१०६२ )। ... ... | ५८४ |

| विषयः | पत्राङ्कः |
| --- | --- |
| ज्ञानक्रियानयवक्तव्यता, ( गा. १०६५–१०६७ ) । ... | ५८६ |

इति सामायिकाध्यनम्

| विषयः | पत्राङ्कः |
| --- | --- |
| अध्ययनसम्बन्धः, चतुर्विंशत्यादेर्निक्षेपाः, (गा. १०६८) । चतुर्विंशतेः, ( गा. १९२ भा. ) स्तवस्य, ( गा. १९३ ) । भावस्तवमहत्ता, ( गा. १९४–१९५ ) । कूपदृष्टान्तो द्रव्ये, ( गा. १९६ भा. ) । ... | ५८८ |
| 'लोगस्स' सूत्रव्याख्या । ... ... ... | ५९१ |
| लोकनिक्षेपाः ८ ( गा. १०६९ ) जीवाजीवनिरयत्वादि, कालभवभावपर्यवलोकाः, ( गा. १९७–२०५ ) । | ५९२ |
| लोकपर्यायाः, उद्योतनिक्षेपाः ४, ( गा. १०७४ ) । ... | ५९४ |
| धर्मनिक्षेपाः, ४ ( गा. १०७५–६ ) । तीर्थनिक्षेपाः ४, त्रिस्थत्र्यर्थाद्याः पर्यायाः ( गा. १०८१ ) । ... | ५९५ |
| करनिक्षेपाः ६, द्रव्यकराः १८ प्रशस्तभावकरः, ( गा. १०८२–७ ) ... ... ... ... | ५९६ |
| अर्हत्कीर्त्तनचतुर्विंशतिकेवलिपदानि (गा. १०८९–९१) । चालनासमाधी । ... ... ... ... | ५९७ |
| ऋषभादिनामान्वर्थाः, ( गा. १०९२–९९ ) ... | ५९९ |

इति चतुर्विंशतिस्तवाध्ययनम् ।

## श्रेष्ठी देवचंद लालभाइ जैनपुस्तकोद्धारफंडद्वारा मुद्रिताः

लभ्यग्रन्थाः—

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| ४२ | आनंदकाव्यमहोदधिः ( षष्ठं मौक्तिकम् ) | ०-१०-० |
| ६२ | सुबोधासामाचारी | ०—८—० |
| ६४ | प्रवचनसारोद्धारः ( सटीक उत्तरार्द्धः ) | ४—०—० |
| ६६ | आनंदकाव्यमहोदधिः ( सप्तमं मौक्तिकम् ) | १—८—० |
| ६७ | तत्त्वार्थाधिगमसूत्रम् (भाष्यटीकायुतंपूर्वार्द्धम्) | ६—०—० |
| ६८ | नवपदप्रकरणम् ( लघुवृत्तिसहितम् ) | १—०—० |
| ६९ | पंचवस्तुकग्रन्थः ( स्वोपज्ञटीकाऽन्वितः ) | ३—०—० |
| ७० | आनंदकाव्यमहोदधिः ( अष्टमं मौक्तिकम् ) | १—८—० |
| ७१ | आचारप्रदीपः | १—८—० |
| ७२ | विचाररत्नाकरः | ३—०—० |
| ७३ | नवपदप्रकरणम् ( बृहद्वृत्तिसहितम् ) | ४—०—० |
| ७४ | लोकप्रकाशः ( द्वितीयो विभागः ) | २—८—० |
| ७५ | महावीरचरित्रम् (गुणचन्द्रगणिकृतं प्राकृतम्) | ४—०—० |
| ७६ | तत्त्वार्थाधिगमसूत्रम् ( भाष्यटीकायुतं उत्तरार्द्धम् ) | ६—०—० |
| ७७ | लोकप्रकाशः ( तृतीयो विभागः ) | २—०—० |
| ७८ | भरतेश्वरबाहुबलिवृत्तिः ( प्रथमो विभागः ) | २—०—० |
| ७९ | भक्तामर-कल्याणमन्दिर—नमिऊणस्तोत्रत्रयं सटीकम् | ५—०—० |
| ८० | प्रियङ्करनृपकथा | १—८—० |

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| ८१ | अनेकार्थरत्नमञ्जूषा ( अष्टलक्षार्थी ) | ३–०–० |
| ८२ | कल्पसूत्रम् ( बारसासूत्रम् ) सचित्रम् | १२-०-० |
| ८३ | ऋषभपञ्चाशिका ( टीकाभाषान्तरयुता ) | ४–०–० |
| ८४ | जैनधर्मवरस्तोत्रम् ( टीकाभाषान्तरयुतम् ) | ३–०–० |

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| | मुद्र्यमाणाः ग्रन्थाः | |
| ८५ | आवश्यकसूत्रम् ( मलयगिरीयटीकायुतं तृतीयो विभागः, सम्पूर्णः ) अयं ग्रन्थः | |
| ८६ | लोकप्रकाशः ( चतुर्थ विभागः, सम्पूर्णः ) | |

प्राप्तिस्थानम्—

शेठ देवचंद लालभाई जैन धर्मशाला,
बडेखान् चकला, गोपीपुरा, सुरत.

# श्रीमतीआगमोदयसमितिद्वारा मुद्रिताः

लभ्यग्रन्थाः—

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| ४४ | विशेषावश्यकभाष्यगाथा-विषयानुक्रमः | ०—५—० |
| ४५ | गच्छाचारप्रकीर्णकम् ( सटीकम् ) | ०—६—० |
| ४७ | धर्मबिन्दुप्रकरणम् ( सटीकम् ) | ०-१२-० |
| ४८ | भक्तामरस्तोत्रपादपूर्तिकाव्यसङ्ग्रहः ( टीकाभाषान्तरयुतः प्रथमो विभागः ) | ३—०—० |
| ४९ | [illegible] ( संस्कृतच्छायाऽन्वितम् ) | २—०—० |
| [illegible] | [illegible] ( स्वोपज्ञटीकायुतः ) | २—८—० |
| [illegible] | [illegible] ( मूलस्य टीकायाश्च [illegible], द्वितीयो विभागः | ३—०—० |
| [illegible] | [illegible] ( सटीका ) | १—८—० |
| ५१ | स्तुतिचतुर्विंशतिका ( शोभनमुनिकृता सचित्रा, सटीका च ) | ८—०—० |
| ५२ | स्तुतिचतुर्विंशतिका ( शोभनमुनिकृता सचित्रा, टीकाभाषान्तरयुता च ) | ६—०—० |
| ५३ | चतुर्विंशतिका ( बप्पभट्टिसूरिकृता, सचित्रा, टीका-भाषान्तरयुता ) | ६—०—० |
| ५४ | भक्तामरस्तोत्रपादपूर्तिकाव्यसङ्ग्रहः (टीका-भाषान्तरयुतो द्वितीयो विभागः) | ३—८—० |
| ५५ | नन्द्यादिसप्तसूत्रगाथाविषयानुक्रमः | २—०—० |

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| ५६ | आवश्यकसूत्रम् ( मलयगिरीयटीकायुतं, प्रथमो विभागः ) | ४–०–० |
| ५७ | लोकप्रकाशः ( गुर्जरानुवादयुतः प्रथमो विभागः ) | ३–८–० |
| ५९ | चतुर्विंशतिजिनानन्दस्तुतिः (पं. मेरुविजयकृता, सचित्रा, टीकाभाषान्तरयुता ) | ६–०–० |

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| ६० | आवश्यकसूत्रम् ( मलयगिरीयटीकायुतं, द्वितीयो विभागः ) | २–८–० |
| ६१ | लोकप्रकाशः ( गुर्जरानुवादयुतो द्वितीयो विभागः ) | ३–८–० |

प्राप्तिस्थानम्—
शेठ देवचंद लालभाई जैन धर्मशाला,
बडेखान् चकला, गोपीपुरा, सुरत.

# सूर्यपुरे श्रीजिनदत्तसूरि–ज्ञानभाण्डागारे

## लभ्यग्रन्थाः—

| ग्रन्थः | मूल्यम् | ग्रन्थः | मूल्यम् | ग्रन्थः | मूल्यम् |
|---|---|---|---|---|---|
| पंचलिंगी प्रकरणम् ( सटीकं ) | २-८-० | पौषधषट्त्रिंशिका ( जयसोमीया, स० ) | १-०-० | पंचप्रतिक्रमणादिसूत्र (मूलमात्र, शास्त्री) | ०-१०-० |
| संदेहदोलावली ( बृहद्वृत्तियुता ) | २-०-० | श्रीपालचरित्रम् ( सं० श्लोकबद्धम् ) | भेट | राइदेवसिप्रतिक्रमणसूत्र ( मूल, शास्त्री ) | ०-४-० |
| जयतिहुअणस्तोत्रम् ( सटीकं ) | ०-४-० | ,, ,, (प्रा० हिन्दी अनुवादयुतं) | २-०-० | धर्म० उत्सूत्रखण्डनम् ( सटीकं ) | १-०-० |
| संवेगरंगशाला ( सं० छायान्विता ) | २-८-० | चैत्यवन्दनकुलकम् ( सटीकम् ) | २-४-० | श्रीजिनदत्तसूरिचरित्र ( पूर्वार्द्ध ) | १-८-० |
| प्राकृतदीपिकाकलापम् | ०-८-० | साधुपंचप्रतिक्रमणसूत्र (हिन्दीशब्दार्थयुक्त) | १-०-० | श्रीजिनदत्तसूरिचरित्र ( उत्तरार्द्ध ) | १-८-० |
| भक्तामरस्तोत्रम् ( सटीकम् ) | ०-८-० | | | बृहत्स्तवनावली | १-८-० |
| ईर्यापथिकीषट्त्रिंशिका(जयसोमीया,सटीका) | १-०-० | श्रावकपंचप्रतिक्रमणसूत्र ( ,, ,, ,, ) | १-०-० | प्राकृतव्याकरणम् | १-०-० |

प्राप्तिस्थानम्—

श्रीजिनदत्तसूरि–ज्ञानभंडार,
शीतलवाडी–उपाश्रय,
ओशवाल महोल्ला, गोपीपुरा, सुरत.

## मोहमय्यां श्रीजिनदत्तसूरि–ज्ञानभाण्डागारे

### लभ्यग्रन्थाः—

| ग्रन्थ | मूल्य | ग्रन्थ | मूल्य | ग्रन्थ | मूल्य |
|---|---|---|---|---|---|
| द्वादशकुलकम् ( सटीकं ) | १–०–० | श्रीपालचरित्रम् ( संस्कृतं श्लोकबद्धम् ) | भेट | पंचप्रतिक्रमणादिसूत्र (मूलमात्र, शास्त्री ) | ०-१०-० |
| षट्स्थानप्रकरणम् ( सटीकं ) | ०–८–० | ,, ,, (प्रा० हिन्दी अनुवादयुतं) | २–०–० | ,, ,, ( ,, गुजराती ) | ०-१०-० |
| भक्तामरस्तोत्रम् ( सटीकं ) | ०–८–० | साधुपंचप्रतिक्रमणसूत्र (हिन्दीशब्दार्थयुक्त) | १–०–० | राइदेवसिप्रतिक्रमणसूत्र (मूल, शास्त्री ) | ०–४–० |
| कल्याणमन्दिरस्तोत्रम् ( सटीकं) | ०–८–० | श्रावकपंचप्रतिक्रमणसूत्र ( ,, ,, ) | १–०–० | दादासाहेबकी पूजा ( शास्त्री ) | ०–२–० |

प्राप्तिस्थानम्—

श्रीजिनदत्तसूरि–ज्ञानभंडार,
महावीरस्वामि–जैन–मंदिर,
पायधुनी, मुंबई ३.

इति श्रीमन्मलयगिर्याचार्यविहिताया
आवश्यकवृत्तेर्तृतीयो भागः समाप्तः ॥

इति श्रीमन्मलयगिर्याचार्यविरचिता आवश्यकवृत्तिः समाप्ता ॥

इति श्रेष्ठी-देवचन्द्र लालभाई-जैनपुस्तकोद्धारे ग्रंथाङ्कः ८५

इति श्रीमन्मलयगिर्याचार्यविहिताया
आवश्यकवृत्तेर्तृतीयो भागः समाप्तः ॥

इति श्रीमन्मलयगिर्याचार्यविरचिता आवश्यकवृत्तिः समाप्ता ॥

इति श्रेष्ठी-देवचन्द्र लालभ्रातृ-जैनपुस्तकोद्धारे ग्रंथाङ्कः ८५